रादशतेप्रोक्ताः सर्वतंत्रेषु गोपिताः ॥ १ ॥ यान्कृत्वा संप्रदायेन मंत्री वांछितमश्नुते एवं दशसंस्कारान्कृत्वा मूलमंत्रं ताम्बूलपत्रे भूर्जपत्रे वा लिखित्वा कंठे वा दक्षिणहस्ते वा धारयेदिति दशसंस्काराः मंत्रस्य ॥ इति पुरश्चरणदीपिकायां अरिमंत्रस्यागारेविधानाख्यस्तृतीयः प्रकाशः ३ ॥ अथ जपस्थानानि नारदीये० शिवस्य सन्निधाने च सूर्याग्न्योर्वा गुरोरपि दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते गृहे जपं स्मृतं विद्यात् गोष्ठे शतगुणं भवेत् नद्यां शतसहस्रं स्यादनंतं शिवसन्निधौ समुद्रतीरे चह्रदे गिरौ देवालयेषु च पुण्याश्रमेषु सर्वेषु जपं कोटिगुणं भवेत् तत्पूर्वाभिमुखो वश्यं दक्षिणे चाभिचारिकं पश्चिमे धनदं विद्यादुत्तरे शांतिदं भवेत् अन्यच्च अग्रेऽश्वत्थस्य वामे समीपे गर्भमंदिरे जपं प्रदक्षिणं होमं न कुर्याद्धि शिवालये इति जपस्थानानि० इत्यादिस्थानमाश्रित्य दीपस्थानं विचिंतयेत् कूर्मस्यैव मुखं विद्धि दीपस्थानं सुसिद्धिदं तद्यथा चतुरस्रं भुवं भित्त्वा कोष्ठानां नवकं लिखेत् पूर्वकोष्ठादि दिक्षु लिखेत्सप्त वर्गाननुक्रमात् लक्षावीशे मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत् दिक्षु पूर्वादितो पत्रग्रामस्याद्यक्षरं भवेत् मुखं तदास्य जानीयात् हस्तावुभयतः स्थितौ कोष्ठे कुक्षी उभे पादौ हौ शिष्टं पुच्छमीरितम् ॥ कूर्मचक्रमिदं प्रोक्तं मंत्राणां सिद्धिसाधनं मुखस्थो लभते सिद्धिं करस्थः स्वल्पभोगभाक् कुक्षिस्थितउदासीनः पादस्थो दुःखमाप्नुयात् पुच्छस्थः पीडितो मंत्री बंधनोच्चाटनादिभिः दीपस्थानं ततः क्षेत्रे हस्तमात्रे शुचिर्जपेत् क्षेत्रसाधकमंत्राणां एकमेवाद्यमक्षरं यदि स्यात्स ध्रुवं मंत्रः क्षिप्रमेव प्रसिध्यतीति श्रीविद्यारण्यचरणाः ग्रंथांतरे मुमंत्रवर्णानां वि

लिखेच्च पूर्वकादींश्च वर्गान्क्रमशः क्षमीशे स्थानाधिपस्याक्षरमस्ति यत्र तं दीपदे शंभुनयो वदंति देवीयामले कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे महाकाले च काश्यां च कूर्मस्थानं न चिंतयेदिति विश्वामित्रकल्पे काशीपुरी च केदारो महाकालोथ नासिकं त्र्यंबकं च महाक्षेत्रं पंच दीपा इमे भुवि एतेषु सर्वतो दीपाः कूर्मासनमितस्ततः इति दीपचक्रं अथासनविचारः वंशाश्मधरणीदारुतृणपल्लवनिर्मितं वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदं तूलकंबलवस्त्राणि पट्टव्याघ्रमृगाजिनं कल्पयेदासनं धीमान् सौभाग्यज्ञानसिद्धिदम् वंशासने दरिद्रत्वं पाषाणे व्याधिसंभवः धरण्यां स्याद्दुःखभूतिर्दौर्भाग्यं दारुकासने तूलके च यशोहानिः पल्लवे चित्तविभ्रमः कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि स्यात्पौष्टिकं च कौशेयं शांतिकं वेत्रविष्टरं वंशासने व्याधिनाशः कंबले दुःखमोचनं स्यादाभिचारिकं नीले रक्ते वश्यादिकं भवेत् धवले शांतिकं मोक्षः सर्वार्थश्चित्रकंबले सर्वाभावे त्वासनार्थं कुशविष्टरमिष्यते इत्यासनानि अथ जपमाला मंत्रखंडे स्फाटिकी मौक्तिकी वापि मौलव्यासितरत्नकैः सर्वकर्मसमृद्ध्यर्थं जपेद्रुद्राक्षमालया धर्मार्थकाममोक्षार्थं जपेत्पद्माक्षमालया अ-

ष्टं पुत्रजीवैश्च शंखपद्मौ मणिस्तथा कुशग्रंथिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरं अन्यच्चापि रुद्राक्षं श्वेतपद्माक्षमालेतु अखि
लेजपेत् अतिस्थूलोतिसूक्ष्मश्च स्फुटितो भंगुरो लघुः भिन्नः पुरा धृतो जीर्णो रुद्राक्षोनवरस्मृतः करमालाउक्तंच अला
भेजपमालायाः करशाखासु पर्वभिः अनामिकायायो मध्य स्तस्मादधः क्रमेणतु मध्यांगुल्यग्रपर्वादि प्रादक्षिण्यक्रमेण
तु तर्जन्यादौ जपांतश्च अक्षमालाकरे स्थिता अंगुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलंघने असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं
भवेत् मध्यमादिद्वयं पर्वजपकालेतु वर्जयेत् पर्वमेरुं विजानीयात्तस्मात्तत्परिवर्जयेत् अथवा करशाखाभिः कृतेष्वो जा
पकैर्जपः अंगुल्या जपसंख्या नामेकमेवमुदाहृतं रेखयाष्टगुणं विद्यात् पुत्रजीवैर्दशस्मृतं शतं चंदनशंखैश्च प्रवालैस्तु
सहस्रकं स्फाटिकैर्लक्षसाहस्रं मौक्तिकैर्लक्षमेवच दशलक्षं राजताक्षैः सौवर्णैः कोटिरुच्यते कुशग्रंथ्याच रुद्राक्षै
रनंतगुणितो भवेत् अथ जपमालामणिसंख्या अष्टोत्तरशतैर्माला पंचाशच्चतुराधिकैः सप्तविंशतिभिः कार्या एकग्रीवा।
समेरुका मुखंमुखेन संयोज्य पुच्छं पुच्छेन योजयेत् प्रोतव्या सितसूत्रेण सत्कर्मफलसिद्धये पट्टसूत्रकृता माला देव्याः प्री
तिकरा मता कार्पासैर्वैष्णवीमाला पद्मसूत्रैरथापिवा ऊर्णाभिर्वल्कलैर्वापि शैवी माला प्रकीर्तिता कार्पाससूत्रैरन्येषां।
विदध्याज्जपमालिका कामनायां विशेषः त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् पंचविंशतिभिर्मोक्षे पंचद।
श्याभिचारिके पंचाशद्भिः कुलेशानि सर्वसिद्धिरुदाहृता श्रीशिवज्ञानविद्यायामपि अंगुष्ठंमोक्षदं विद्यात्तर्जनी श।

त्रुनाशिनी मध्यमाधनदा शांतिकरात्वेषाह्यनामिका कनिष्ठाकर्षणेशस्ताजपकर्मणिशोभने अंगुष्ठेनजपंजप्यमन्यैरंगुलि
भिःसह अंगुष्ठेनविनाकर्मक्कतंतदफलंयतः मोक्षार्थंपंचविंशत्यासप्तविंशतियौष्टिके त्रिंशच्चधनसंपत्यैपंचदश्याभिचारि
कं जप्त्वाक्षमालांसकलांभ्रामयेदाशिखामणिं प्रदक्षिणंपुनर्वक्त्रेप्रारभ्यैवंसमाचरेत् स्वयंवामेनहस्तेनजपमालांनसं
स्पृशेत् अदीक्षितोहिजोवापि स्पृष्टश्चेच्छुद्धिमाप्नुयात् नधारयेत्करेमूर्ध्निकंठेचजपमालिकां जपकालेजपंकृत्वासदा
गुह्येस्थलेक्षिपेत् गुरुंप्रकाशयेद्धीमान्मंत्रंनैवप्रकाशयेत् अक्षमालांचमुद्रांचगुरोरपिनदर्शयेत् अन्यच्च कंपनात्सिद्धि
हानिःस्याद्धूननंबहुदुःखकृत् शब्देजातेभवेद्रोगोकरभ्रष्टाविनाशकृत् छिन्नेसूत्रेभवेन्मृत्युस्तस्माद्यत्नपरोभवेत् जपांतेक
र्णदेशेवाउच्चस्थानेथवान्यसेत् अक्षमालाद्विधाप्रोक्ताकल्पिताकल्पितेतिच कल्पितामणिभिःक्लृप्तामातृकास्यादकल्पि
ता आदिक्षांताक्षरैःप्रोक्तामालावर्णमयीबुधैः अनुलोमविलोमाभ्यांगणयेन्मंत्रवित्तमः जपमालांविधायेत्थंततःसं
स्कारमाचरेत् मालासंस्कारः क्षालयेत्तंचगव्येनसद्योजातेनसज्जलैः चंदनागरुगंधाद्यैर्वामदेवेनघर्षयेत् धूपयेत्त
मघोरेणलेपयेत्पुरुषेणतु मंत्रयेत्तंचमेनैवप्रत्येकंतुशतंशतं मेरुंचचंपमेनैवतथामंत्रेणमंत्रयेत् येनप्रतिष्ठितामाला
तमेवतुमनुंजपेत् अन्यमंत्रजपाद्विघ्नानूनकार्योकर्हिचिद्बुधैरिति प्रकारांतरे ईश्वरउ० प्रक्षाल्यपंचगव्येनतथापंचाम
तेनच संस्नाप्यपंचगव्येनशिवकुंभस्थितेनच सर्वंवैमूलमंत्रेणगंधपुष्पाक्षतादिभिः धूपदीपनैवेद्यादिदत्वाचाष्टमं

स्पृशेत् मूलमंत्रंजपेत्तस्माद्दंडवत्प्रणमेद्बुधः एवंयासंस्कृतामालाजपकर्मणिसर्वदा अभीष्टफलदास्यर्थंसासर्वाघविनाशि
नी मध्यमानामिकांगुष्ठैरक्षमालामणीश्रितैः एवंजपस्यचैकस्यक्रमोयंचालयेज्जपेत् अंगुष्ठेनतुमोक्षायमध्यमायुर्विवृद्ध
ये जपेदनामिकांगुष्ठैर्नैतराभ्यांकदाचनेति ग्रंथांतरेतु अंगुष्ठमध्यमायोगात्सर्वसिद्धिप्रदामताद्रुद्राक्षमाला अथभक्ष्या
भक्ष्यविचारः गौतमीये चरुमूलफलक्षीरदधिभिक्षान्नसक्तवः शाकश्चाष्टविधंचान्नंसाधकस्योच्यतेबुधैः नारदीये॰
मृदुकोष्ठंसुपक्वंचकुर्याद्वैलघुभोजनं नेंद्रियाणांविकारःस्यात्तथाभुंजीतसाधकः यद्वातद्वापरित्याज्यंदुष्टान्नंकुत्सितंफ
लं प्रशस्तान्नंसमश्नीयान्मंत्रसिद्धिसमीहया पयोव्रतेतुविशेषः पयोव्रतस्यसिद्धिःस्यात्लक्षेनैवनसंशयः शाकभैक्ष्य
हविष्याशीकलौलक्षत्रयंजपेत् भिक्षान्नंतुनगृहिणः यतिश्चब्रह्मचारीचभिक्षान्नजीविनावुभौ सर्वधर्मविहिर्भूतागृहीभिक्षा
न्नजीवनात् विधवाविधुरश्चापिस्नातकश्चपरित्यजेत् इतिभक्ष्याभक्ष्यम् अथनियमः लवणंपललंचैवक्षारंक्षौद्रंरसांतरं
माषमुद्गमसूराद्याः कोद्रवांश्चणकानपि असद्भाषणमन्याय्यंवर्जयेदन्यपूजनम् विनाश्रमोचितंकिंचित्नित्यनैमित्तिकं
चरेत् स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् असत्यभाषणंचैवकौटिल्यंचपरित्यजेत् सद्भिरपिनभाषेतजपहोमार्च
नादिषु वाग्यतःकर्मनिर्वर्त्यनिस्पृहोवर्तितादिषु वर्जयेत्गीतकाव्यादिश्रवणंनृत्यदर्शनम् पराग्नंचपरद्रव्यंतथैवतुमतिग्रहः
परस्त्रीपरनिंदाचमनसापिविवर्जयेत् जिह्वादग्धापरान्नेनकरौदग्धौमतिग्रहात् मनोदग्धंपरस्त्रीभिःकथंसिद्धिर्वरानने तावु

लेगंधलेपंचपुष्पधारणमेवच मैथुनंतत्कथालापंतद्गोष्ठीःपरिवर्जयेत् कौटिल्यंक्षौद्रमभ्यंगंअनिवेदितभोजनं असंकल्पित
कृत्यंचवर्जयेन्मर्दनादिकम् स्नायाच्चपंचगव्येनकेवलामलकेनवा श्रुतिस्मृतिपुराणोक्तैर्मंत्रैःस्नायान्निरंतरं स्नानंत्रिषवणंप्रोक्तं
अशक्तौद्विःसकृत्तथा अस्ना तस्यफलंनास्तिनचातर्पयतःपितॄन् स्वजप्यमंत्रेणतुकुंभमुद्रयातिमज्जनस्यातुपदंस्वमस्तके
सदाष्टविंशत्यभिषेकमाचरेत् तथाष्टजप्त्वाचमनंचसंततमिति ॥ इतिपुरश्चरणदीपिकायांजपस्थानादिनियमाख्यश्चतुर्थः
प्रकाशः ॥ श्रीदक्षिणामूर्तिगुरुभ्योनमः ॥ अथजपविधानम् ॥ तत्रशुभेदिनेनदीपर्वतमस्तकादौक्षेत्रंपरिकल्प्यक्षेत्रपाल
पूजांविधाय पूर्वोक्तदीपस्थानमाश्रित्यजपमारभेत् तथाकौर्मे अट्टव्यपर्वतःपुण्योनदीतीराणियानिच सर्वाण्यस्वामि।
कान्याहुर्नहितेषुपरिग्रहः ततोन्यत्रसुग्रहंकुर्यादिति तदुक्तंग्रंथांतरे एवंपूर्वसमीरितेनविधिनाशक्त्यास्वयंसादरं संपाद्या
खिलसाधनानिविधिवत्श्रीसद्गुरोराज्ञया नशनैर्नेह्यतिस्पष्टंनद्रुतंनविलंबितं नन्यूनंनातिरिक्तंवाजपंकुर्याद्दिनेदिने जातः।
स्वस्थइतस्ततःसुविहितेस्वस्यासनेभूगृहं कुर्यान्मंत्रमुदीरयन्निति महानुष्ठानहेतोर्वशी गृहीतस्यास्यमंत्रस्यपुरश्चरणसिद्ध
ये मयेयंगृह्यतेभूमिर्मंत्रोयंसिध्यतामिति मंत्रेण ततोज्ञाताज्ञातपापक्षयार्थंसहस्रपंचकंत्रयंवाष्टोत्तरसहस्रंवागायत्रींजप्त्वा
पित्वा ब्राह्मणानभोजनादिनाभ्यर्च्य गुरुंचवस्त्रालंकारादिभिस्ततोहविष्यान्ननैवेद्यभोजनंकुर्यात् कस्यचिन्मतेउपवासः उ
क्तंचसनत्कुमारकल्पे० विप्रान्संतर्पयेदन्नभोजनाच्छादनादिभिः बहुभिर्वस्त्रभूषाभिःप्रणमेद्गुरुमात्मनः आरभेच्चजपंपश्चात्

तदनु तत्पुरःसरमिति पूर्वदिनकृत्यं ततोजपारंभदिनेस्नानादिकंविधायदीपस्थानेगत्वासनविधिंचसंपाद्यसंकल्पंकुर्यात् त
द्यथा अद्येत्यादिपंचांगंस्मृत्वा मुकाख्यामुकमंत्रस्य सिद्धिकामोमुकसंख्याकजपतत्तद्दशांशहोमतर्पणाभिषेक विप्रभोजनात्म
कपुरश्चरणमहंकरिष्ये ब्राह्मणद्वारावाकरिष्ये इतिसंकल्प्यगणेशपूजनंकृत्वामुकऋषिरमुकछंदोमुकदेवतापुरश्चरणजपे
विनियोगः इत्युक्त्वाऋष्यादिन्यासान्ध्यानंचकृत्वा ॐत्वंमालेसर्वदेवानांसर्वसिद्धिप्रदामता तेनसत्येनमेसिद्धिंमातर्देहिनमो
स्तुते इतिजपमालांप्रार्थ्य हस्तेकृत्वा देवोहमितिभावयित्वा जपमारभेदिति पुरश्चरणजपेदिवसातिक्रमोनकर्तव्यः जपस्तु
प्रत्यहंन्यूनोनाधिकः नत्वरयानचविलंबेन किंतुमध्यमवृत्त्याकार्यः उक्तंचनारदीये नैरंतर्यविधिःप्रोक्तोनदिनोव्यतिलंघये
त् दिवसातिक्रमे तेषांसिद्धिरोधःप्रजायते मध्याह्नावधिश्च उक्तंचचिच्चंद्रिकायां शिवादींश्चगुरुंनत्वाजपंकुर्यात्समाहितः॥
उक्तसंख्यामितंप्रातःकालान्मध्यंदिनावधि मानसःसिद्धिकामानांपुष्टिकामैरुपांशुकः वाचिकोमारणेचैवप्रशस्तोजपई
रितः धारयनंदर्भशय्यायांशुचिःप्रयतमानसः नैकवासाजपेन्मंत्रंबहुवस्त्राकुलोनच गोभिलोपि नार्द्रवासाजपंकुर्यात् द्रो
मंदानंप्रतिग्रहं सर्वंतद्राक्षसंविद्याद्बहिर्जानुचयत्कृतं अशुचिदर्शनेउक्तो स्वयमप्यशुचिःपुनः आचांतःप्रयतोभूत्वा।
न्यासंपूर्ववदाचरेत् मौनेनजपंकुर्यात् तदुक्तंमणिसागरे संध्ययोरुभयोर्जाप्ये भोजनेदंतधावने पितृकार्येचदैवेचतथा
मूत्रपुरीषयोः गुरूणांसन्निधौदानेयोगेचैवविशेषतः एषुमौनंसमातिष्ठन्स्वर्गमाप्नोतिमानवः मौनंनोपचरेत्तदाप्रायश्चित्तं

तदुक्तंग्रंथांतरे सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् अन्यच्च जपध्यानसमायुक्तो मंत्री सिद्ध्यति नान्यथेति अथ पुरश्चरणस्वरूपमुच्य
ते पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते कुलार्णवे पंचांगानि महादेवि जपो होमश्च तर्पणं ॥
स्वाभिषेकश्च विप्राणामाराधनमपीश्वरि पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते स्कांदे पूजया विपुलं राज्यं अग्नौ होमेन संपदः जपेन
पापसंशुद्धिर्ध्यानेन ज्ञानमुच्यते वसिष्ठसंहितायां इषुमात्रं स्थंडिलं वा संक्षिप्ते होमकर्मणि पिंगलामते होमे प्रशस्यते कुंडं स्थंडि
लं वा हुसंमितमिति वायवीयसंहितायां कुंडे वा स्थंडिले वापि कुंडे होमः प्रशस्यते होमोक्तविधिना चैव कुर्याद्वै साधकोत्तमः ॥
कुंडं तु नारदेनोक्तं हस्तमात्रं शुभं मतं अथ होमकालः वसंतश्चैव पूर्वाह्णे मध्याह्ने ग्रीष्म उच्यते अपराह्णे भवेद्वर्षा शरच्चैवार्द्धरात्र
के उषो हेमंतकश्चैव संध्यायां शिशिरः स्मृतः ग्रीष्मे उच्चाटनं कुर्यात्स्तंभनं प्रावृषे तथा शरदि शांतिकं कुर्याद्धेमंते मोहनं कुरु शेशि
रे मारणं ज्ञेयं वसंते वश्यकर्मणि अथ वह्निस्वरूपम् बधिरत्वं कर्णहीने नेत्रे त्वंधत्वमाप्नुयात् नासिकायां मनःपीडा शिरोहो
मोहि मृत्युदः यतः काष्ठं ततः श्रोत्रं यतो धूमोथ नासिका यतोल्पज्वलनं नेत्रं यतो भस्म ततः शिरः यतः प्रज्वलितो वह्निस्तन्मुखं
जातवेदसः स्वर्णसिंदूरबालार्ककुंकुमक्षौद्रसन्निभः वह्निवर्णः शुभावहः इति भेरीवारिदहस्तीनां ध्वनिर्वह्नेः शुभावहः ना
गचंपकपुन्नागपाटलायूथिकानिभः गंधो वह्नेः शुभावहः काकस्वरस्वरो वह्नेर्यजमानस्य दुःखदः हष्टेकष्टगते वर्णे यजमानं
विनाशयेत् एवं दुष्टेषु चिह्नेषु प्रायश्चित्तं समाचरेत् मूलेनाज्येन जुहुयात्पंचविंशतिराहुतीः इति वह्निस्वरूपं अथ होमद्रव्याणि ॥

प्रणवकल्पे वाशिष्ठ लैंगउंपपुराणे पालाशपुष्पहोमेन सर्वं सत्त्वमवाप्नुयात् अश्वत्थस्य समिद्धोमाद्वा ह्यर्ण्यंसुस्थिरं भवेत् दूर्वाहो
मात्स्वाप्नोति दीर्घायुष्यं न संशयः अन्नाज्यहोमादाप्नोति मुने राज्यं द्विजोत्तमः कन्याकामो लभेत्कन्यां लाजाहोमेन सुव्रत वैरा
ग्यकामो वैराग्यं लभते घृतहोमतः श्रियार्थी श्रियमाप्नोति बिल्वपत्रस्य होमतः पुत्रकामो लभेत्पुत्रं जीवपुत्रस्य होमतः जीव
पुत्रं बीजविशेषः आरोग्यकाम आरोग्यं लभते तिलहोमतः यद्यदिच्छति तत्सर्वं लभते पुष्पहोमतः अन्यच्च येषां जपे च होमे च
संख्यानोक्ता महर्षिभिः तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः अर्णवे कल्पोक्ता च कृते संख्या त्रेतायां द्विगुणा स्मृता द्वापरे
त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा सनत्कुमारे पाच स्वाहांते नैव मंत्रेण होमः कार्यो विजानतः संन्यासिनां न होमोस्ति न वा
ब्राह्मणतर्पणं जपमात्रेण सिद्धिः स्यात्तर्पणाद्यं विकल्पितं इति तथा च गौतमीये होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः इ
तरेषां तु वर्णानां त्रिगुणादि विधीयते अथ होममुद्रा होमे मुद्रास्मृतास्तिस्रो मृगी हंसी च सूकरी शांतिके च मृगी ज्ञेया हंसी पौ
ष्टिककर्मणि सूकरी ह्यभिचारे तु कार्या तंत्रविदुत्तमैः सूकरी करसंकोची हंसी मुक्तकनिष्ठिका मुक्ताकनिष्ठतर्जन्या मृगी
मुद्रा मकीर्तिता अभिचारादि होमेषु सूकरी कथिता बुधैः सूकरी पुत्रकामाय धनकामाय हंसिनी मृगी मोक्षे प्रकर्तव्या आ
हुतिः सर्वकामिका हुतं यन्मुद्रया हीनं तत्सर्वं निःफलं भवेत् कश्चित्तु प्रत्यहं जपदशांशतर्पणमार्जने करोति कश्चित्तलक्षपू
र्णे होमविपक्षौ सांप्रदायिकौ उक्तं च नारदीये स्वजपस्य दशांशेन होमं कुर्यात् दिने दिने अथवा लक्षपर्यंते होमः कार्यो विपश्चि

नेति अनंतरं दशांशं तर्पणं मार्जनं च कुर्यात् तत्र वैशंपायनः तर्पयास्य दशांशेन नमोंतं मंत्रमुच्चरन् अभिषिंचेत्स्वमूर्धानं जलैः कुंभाख्य
मुद्रया ॥ इति पुरश्चरणदीपिकायां जपविधानाख्यः पंचमः प्रकाशः ॥ श्रीदक्षिणामूर्तिगुरुभ्यो नमः ॥ अथ संक्षेपपुरश्चरणविधिः ॥
कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी देवं ध्यात्वा जपेन्मंत्रं अयुतानां चतुष्टयं दशांशं होमयेत्पश्चात् तर्पयेदभिषेचयेत् ततः सिद्धो
भवेन्मंत्रः स्वात्रवीत्कुंभसंभवः तद्यथा पूर्वोक्तमासतिथ्यादौ अष्टम्यां स्नानादिकं कृत्वा जपस्थाने आसनविधिं च कृत्वा संक
ल्पं कुर्यात् अद्येत्यादि अमुकाक्षरामुकमंत्रस्य सिद्धिकामो अयुतचतुष्टयसंख्याकजपं तद्दशांशहोमं तद्दशांशतर्पणं तद्दशांश
भिषेकात्मकपुरश्चरणमहं करिष्ये तत्राष्टम्यादिचतुर्दशीपर्यंतं प्रतिदिनं पंचसहस्रं सप्तमे च तु दशसंख्याकं चतुर्दशस्थाने
षोडशसंख्याकं जपमहं करिष्ये इति संकल्प्य न्यासादिकं च कृत्वा जपं कुर्यात् जपांते होमादिकं च अथवान्यप्रकारेण पुरश्चर
णमुच्यते ग्रहणेर्कस्य चंद्रस्य शुचिः पूर्वमुपोषितः नद्यां समुद्रगामिन्यां नाभिमात्रांभसि स्थितः स्पर्शाद्विमुक्तिपर्यंतं जपेन्मंत्रं स
माहितः तावत्कालं जपित्वा तु होमादिकं समाचरेत् ॥ इति कुलप्रकाशतंत्रे उक्तं पूर्वदिने उपवासमेकभुक्तं वा कुर्यात् कुलार्णवे ॥
अन्नैश्च तु विधैर्दिव्यपदार्थैः षड्रसान्वितैः संभोजितेषु विप्रेषु सर्वं हि सफलं भवेत् सम्यक्सिद्धैकमंत्रस्य पंचांगोपासनेन च सर्वे
मंत्राश्च सिध्यंति तत्प्रभावात्कुलेश्वरि गुरुं विना मंत्रजपे दोषश्रवणमेव च अर्णवे यदृच्छया श्रुतं मंत्रं छद्मनापि बलेन वा प्रेतितं
वाथ गाथादौ यज्जपेत्तदनर्थकृत् पुस्तके लिखितान्मंत्रानालोक्य प्रजपंति ये ब्रह्महत्यासमं तेषां पातकं परिकीर्तितं ग्रंथांतरे०

आवाह्यदेवतामेकां अर्चयेच्चान्यदेवतां उभाभ्यां लभतेशापं मंत्रीचंचलमानसः अन्यत्र प्रवासीबहुभक्षीचप्रजल्पोहीद्रियग्रहः ॥
नीचसंगाच्चलौल्याच्च भ्रष्टोमंत्रोनसिध्यति अथवादेवतारूपंगुरुंध्यात्वाततोयजेत् पुरश्चरणहीनोपिमंत्राः सिध्येन्नसंशयः ॥
श्रीभगवानपिसंतुष्टोहिगुरुर्यस्यतस्यतुष्टंजगत्त्रयं नास्त्यसाध्यंजगत्यत्रसुप्रसन्नेगुरौमुने एवंपुरश्चरणंकृत्वागुरुदेवतामभि
वंद्य वित्तादिनाशुश्रूषयाविद्यांजपेत् एतत्कर्मपरिसमाप्तौकल्योक्तान्ब्राह्मणान्भोजयित्वा अन्यानिप्रयोजनानिसाधयेदिति
॥ ॥ इतिश्रीमद्भट्टोपनामककाशीनाथेनविरचितापुरश्चरणदीपिकासमाप्ता ॥ ॥ सम्पूर्णमस्तु ॥ शुभम्भूयात् ॥ ॥
॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः काशीसंस्कृतमुद्रायामङ्कितोयंशिलाक्षरैः १ श्रीकाशीजीमे ज्ञानवापीके
पूर्वफाटकपर श्रीविश्वनाथजीकेपास महाराज शिवलालदुबेजीके मकानमे काशीसंस्कृतमुद्रायंत्रमे छपी जिनको
लेनाहोय उनको इसकार्यके संपादक श्रीबाबूवाराणसीप्रसादजीकेपास याकचोरीगलीमे भाईप्रतापसिंहजीके दुकान
परमिलैगी ॥ ॥ संवत् १९३५ ॥ मितिमार्गशीर्षकृष्ण ११ गुरुवार ता० २० माहेनवम्बर सन् १८७८ ईशवी० ॥

